श्रिया अतीव उपशोभमानास्तिष्ठन्ति, इदं च नित्यकुसुमितत्वादिकं जम्बूवृक्षाणामुत्तरकुरुक्षेत्रापेक्षया बोध्यं, अन्यथैषां प्रावृट्कालभाविपुष्पफलोदयवत्त्वेन प्रत्यक्षबाधात्, एतेन च जम्बूवृक्षबहुलो द्वीपो जम्बूद्वीप इत्यावेदितं भवति, अथवा जम्ब्वां सुदर्शनाभिधानायामनादृतनामा–पूर्वं जम्बूवृक्षाधिकारे व्याख्यातनामा देवो महर्द्धिको यावत्करणात् 'महज्जुईए'इत्यादि ग्राह्यं, पल्योपमस्थितिकः परिवसति, अथ तेनार्थेन भदन्त! एवमुच्यते–स्वाधिपत्यनादृतनामदेवाश्रयभूतया जम्ब्वोपलक्षितो द्वीपो जम्बूद्वीप इति, सूत्रैकदेशो ह्यपरं सूत्रैकदेशं स्मारयतीति 'अदुत्तरं च णं जम्बुद्दीवस्स सासए णामधेज्जे पण्णत्ते जण्ण कयाइ ण आसी ण कयाइ णत्थि ण कयाइ ण भविस्सइ जाव णिच्चे' इति ज्ञेयम्, जीवाभिगमादर्शे तथादर्शनात्, एतेन किमाकारभावप्रत्यवतारो जम्बूद्वीप इति चतुर्थः प्रश्नो निर्य्यूढ इति। अथ प्रस्तुततीर्थद्वादशाङ्गीसूत्रसंसूत्रणाविश्वकर्मा श्रीसुधर्मस्वामी स्वस्मिन् गुरुत्वाभिमानं परिजिहीर्षुः प्रस्तुतग्रन्थनामोपदर्शनपूर्वकं निगमनवाक्यमाह—'तए णं'मित्यादि, शाश्वतत्वाच्छाश्वतनामकत्वाच्च सद्रूपोऽयं जम्बूद्वीपरूपो भावः, सन्तं हि भावं नापलपन्ति वीतरागास्ततः श्रमणो भगवान् महावीरो मिथिलायां नगर्यां माणिभद्रे चैत्ये बहूनां श्रमणानां बहूनां श्रमणीनां बहूनां श्रावकाणां बहूनां श्राविकाणां बहूनां देवानां बहूनां देवीनां मध्यगतो न पुनरेकान्ते एकतरस्य कस्यचित् पुरतः एवं–यथोक्तमुक्तानुसारेणेत्यर्थः आख्याति–प्रथमतो वाच्यमात्रकथनेन एवं भाषते–विशेषवचनकथनतः एवं प्रज्ञापयति–व्यक्तपर्यायवचनतः एवं प्ररूपयत्युपपत्तितः, आख्येयस्याभिधानमाह–जम्बूद्वीपप्रज्ञप्तिरिति नाम षष्ठो-





पाङ्गमिति शेषः, एतच्च ग्रन्थाग्रेण साधिकैकचत्वारिंशच्छतश्लोकमानं, यत्तु श्रीमलयगिरिपादैः सूर्यप्रज्ञप्तिटीकायां द्वितीयप्राभृतप्राभृते 'एवामेव सपुव्वावरेणं जम्बुद्दीवे दीवे चउद्दस सलिलासयसहस्साइं छप्पण्णं च सलिलासहस्साइं भवंतीतिमक्खाय'मित्यंतं श्लोकसहस्रचतुष्टयमानमुक्तं, ज्योतिष्काधिकारसूत्रमीलनेन च सप्तचत्वारिंशच्छताधिकमपि, तत्तु यावत्पदसंग्रहेण जन्माधिकारबृहद्वाचनाप्रक्षेपेण च तावत्परिमाणं सम्भाव्यत इति बोध्यं। अत्र गुणान् विभावयन्नाह—'अज्जो अज्झयणे अट्ठं च हेउं च पसिणं च'इत्यादि, आरात्—सर्वपापाद् दूरं यातः आर्यः—श्रीवर्द्धमानस्वामी अत एव सर्वसावद्यवर्जकत्वेन 'सावद्यं निरर्थकं तुच्छार्थकं च न ब्रूयादि'ति वक्तृप्रामाण्येन वचनप्रामाण्यमावेदितं भवति, अथवा श्रीसुधर्म्मस्वामिसम्बोधनं श्रीजम्बूस्वामिनं प्रति हे आर्य! इति, अध्ययने—प्रस्तुतजम्बूद्वीपप्रज्ञप्तिनामके स्वतन्त्राध्ययने न तु शस्त्रपरिज्ञादिवत् श्रुतस्कन्धाद्यन्तर्गते अर्थं च चाः परस्परं समुच्चयार्थाः हेतुं च प्रश्नं च कारणं च व्याकरणं च भूयो भूयो—विस्मरणशीलश्रोत्रनुग्रहार्थं वारंवारं प्रकाशनेन अथवा प्रतिवस्तु नामार्थादिप्रकाशनेनोपदर्शयतीति सम्बन्धः, अनेन गुरुपारतन्त्र्यमभिहितं, तत्रार्थो जम्बूद्वीपादिपदानामन्वर्थः, स यथा 'से केणट्ठेणं भन्ते! एवं वुच्चइ—जम्बुद्दीवे दीवे?, गोअमा! जम्बुद्दीवे णं दीवे तत्थ तत्थ देसे तहिं २ बहवे जम्बूरुक्खा जम्बूवणा जम्बूवणसंडा णिच्चं कुसुमिआ जाव पिंडिममंजरिवडेंसगधरा सिरीए अईव २ उवसोभेमाणा चिट्ठंति, जम्बूए अ सुदंसणाए अणाढिए णामं देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से तेणट्ठेणं गोअमा! एवं वुच्चइ—जम्बुद्दीवे २' इति, तथा हेतुः—निमित्तं स

यथा 'पभू णं भन्ते! चंदे जोइसिंदे जोइसराया चन्दवडेंसए विमाणे चन्दाए रायहाणीए सभाए सुहम्माए तुडिएणं सद्धिं महयाहयणट्टगीअवाइअ जाव दिवाइं भोगभोगाइं भुंजमाणे विहरित्तए?, गोअमा! णो इणट्ठे समट्ठे' इत्यत्राभिधातव्यार्थस्य 'से केणट्ठेणं जाव विहरित्तए?, गोअमा! चन्दस्स जोइसिंदस्स० चन्दवडेंसए विमाणे चन्दाए रायहाणीए सभाए सुहम्माए माणवए चेइअखंभे वइरामएसु गोलवट्टसमुग्गएसु बहूईओ जिणसकहाओ संनिक्खित्ताओ चिट्ठंति, ताओ णं चन्दस्स अन्नेसिं च बहूणं देवाण य देवीण य अच्चणिज्जाओ जाव पज्जुवासणिज्जाओ, से तेणट्ठेणं गोअमा! णो पभू'त्ति, इदं सूत्रं हेतुप्रतिपादकम्, तथा प्रश्नः—शिष्यपृष्टस्यार्थस्य प्रतिपादनरूपः, यथा लोकेऽप्युच्यते—अनेन प्रश्नानि सम्यकु कथितानि, अन्यथा सर्वथा सर्वभावविदो भगवतः प्रष्टव्यार्थाभावेन कुतः प्रश्नसम्भव इति, यथा—'कहि णं भन्ते! जम्बुद्दीवे दीवे केमहालए णं भन्ते! जम्बुद्दीवे दीवे किंसंठिए णं भन्ते! जम्बुद्दीवे दीवे किमायारभावपडोआरे णं भन्ते! जम्बुद्दीवे दीवे पण्णत्ते?, गोअमा! अयण्णं जम्बुद्दीवे दीवे सव्वदीवसमुद्दाणं सव्वब्भंतरए सव्वखुड्डाए वट्टे तेल्लापूअसंठाणसंठिए वट्टे पुक्खरकण्णिआसंठाणसंठिए वट्टे पडिपुण्णचंदसंठाणसंठिए एगं जोअणसयसहस्सं आयामविक्खंभेणं तिण्णि जोअणसयसहस्साइं सोलस य सहस्साइं दोण्णि अ सत्तावीसे जोअणसए तिण्णि अ कोसे अट्ठावीसं च धणुसयं तेरस अंगुलाइं अद्धंगुलं च किंचिविसेसाहिअं परिक्खेवेणं पण्णत्ते' इति, तथा करणं—अपवादो विशेषवचन मितियावत्, तच्च नवरंपदगर्भितसूत्रवाच्यं, यथा—'कहि णं भन्ते! जम्बुद्दीवे दीवे एरवए णामं वासे पण्णत्ते?,